हर्षनाथकाव्यग्रन्थावली

ओं नमस्सरस्वत्यै

# उषाहरणनाटकम्

## राग इमन

जय जय कुमतिविनाशिनि देवि,
मम अभिमत पुर तुअ पदसेवि ।
तनुरुचिनिन्दितकुन्दकभास,
आननरुचि शशिबिम्ब उदास ।
आसन धवल कमल शशिभाल,
श्वेतवसन लस नयनविशाल ।
वीणादण्ड कलश धरु हाथ,
जपमाला वरपुस्तक साथ ।
हर्षनाथकवि मनदय भान,
भगवति करिय अभय वरदान ॥१॥

## गीतार्थे श्लोकः

या शुक्लाम्बुरुहासना सुनयना पूर्णेन्दुबिम्बानना
कुन्देन्दूज्ज्वलविग्रहा निजकरैस्संबिभ्रती पुस्तकम् ।
वीणामक्षगुणं सुधाद्यकलशम्ब्रह्मादिदेवार्चिता
सर्व्वाभीष्टफलप्रदा वितरतु श्रेयांसि सा शारदा ॥२॥

## नान्द्यन्ते

सूत्रधारः—अलमतिविस्तरेण। आदिष्टोऽस्मि खण्डवलाकुलरत्नाकरसुधाकरेण कविपण्डितकुलहृदयसरसीरुहभृङ्गायमाणेन सकलराजकुलमुकुटरत्नायमानचरणकमलेन मिथिलामहीमहेन्द्रेण महाराज श्रीरलक्ष्मीश्वरसिंहदेवदेवेन यथाऽस्मत्सभापण्डितेन कविपण्डितकुलतिलकायमानेन सकराढीकुलनन्दनेन श्रीहर्षनाथशर्म्मणा विरचितमभिनवमुषाहरणन्नाम नाटकमभिनीयतामिति। तद्गृहिणीमाहूय संगीतकमवतारयामि तावत् [सर्व्वतः परिक्रम्य नेपथ्याभिमुखमवलोक्य]—प्रिये इहागम्यताम् ।

[प्रविश्य]

नटी—एसह्मि आणवेदु अज्जउत्तो[1] ।

---

एषाऽस्मि आज्ञापयतु आर्य्यपुत्र ।



सूत्र०—प्रिये पश्य सर्व्वतस्सुसमृद्धोयं वसन्तसमयः ।

तथाहि—

सम्फुल्लन्नवमल्लिकापरिमलःश्रीखण्डशैलानिलो-
माद्यत्कोकिलकामिनीकलकलः कन्दर्पबाणानलः ।
भृङ्गालीकुलकाकलीनववधूश्रेणीकटाक्षावली
निश्शङ्कम्भुवि सर्व्वतः प्रसरति प्राप्ते वसन्तोत्सवे ॥२॥

तदेनं वसन्तसमयमधिकृत्य सङ्गीतकमनुतिष्ठतु भवती ।

नटी—

जहाणवेदि अज्जउत्तो[1] [इति गायति] ।

वसन्त

मदननरेश विजय मनकाज,
लय परिजन अनुगन ऋतुराज ।
शोभित अलि तति मरकतमाल,
केशरमणिमय-छत्र विशाल ।
मारुत-कम्पितमाधवि-पुंज,
नाचत रसमय भवन-निकुंज ।

---

१ यथाज्ञापयत्यार्य्यपुत्रः ।

अलिकुलगुंजित गानविलास,
चम्पक किंशुक दीपकभास ।
कोकिलकलरव नृपतिनिदेश,
चलत समीरन दण्ड उदेश ।
निरखि सुरत विघटन अपराध,
करत कोप तँह मानक बाध ।
रसमय हर्षनाथकविभान,
नृपलक्ष्मीश्वरसिंह रसजान ॥२॥

अपि च

उसरल जगभरि शिशिरपसार,
बसल सरस ऋतुपति बनिजार ।
पसरल सओदा मधुरस फूल,
अभिनव सौरभ प्रेम अमूल ।
तौलत दक्षिण पवन विचारि,
भमि भमि माँगत भ्रमर भिखारि ।
पिककुल करत दलालक काज,
गाहक तरुणी तरुणसमाज ।
हसित वचन लोचन दय दाम,
किनत सिनेह रतन सब ठाम ।



रसमय हर्षनाथकविभान,
नृपलक्ष्मीश्वरसिंह रस जान ॥३॥

सूत्र०—प्रिये साधुगीतम्

[नेपथ्ये]

इदो इदो पिअसहीओ[1] ।

सूत्र०—[आकर्ण्य] कथमियं बाणपुत्री उषा कुम्भाण्ड-दुहित्रा रामया चित्रलेखयाऽप्सरसा च समं किमपि मन्त्रयन्ती इत एवाभिवर्त्तते । तदेहि आवामप्यनन्तरकरणीयाय सज्जीभवाव । [इति निष्क्रान्तौ]

प्रस्तावना ।

[ततः प्रविशति सखीभ्यां सहिता उषा ।]

**गीत । राग कल्याण**

तड़ितविनिन्दक सुन्दर वेस,
गजगामिनि कामिनि परवेश ।
अलक कलित आनन अभिराम,
जनि घन वलित विमल हिमधाम ।
अधर ललित नाशा अति शोभ,
कीर वैसल जनु बिम्बक लोभ ।

---

[1] इतः इतः प्रियसख्यौ ।

निरखि युगलकुच पङ्कज काँति,
चललि रोमावलि मधुकर पाँति ।
अविरल नूपुरकिङ्किणिराव,
मदनविजय जनु सामग गाव ।
रसमय हर्षनाथकवि गाव,
नृप लक्ष्मीश्वरसिंह बुझ भाव ॥४॥

## राग कान्हड़ा

उपचित हृदय अनङ्ग, चललि रमणि सखिसङ्ग ।
मन्द मन्द परचार, जनि आलस कुचभार ।
अलस नयन चित चोर, जनि मद भरल चकोर ।
बोल बचन हँसि मन्द, अमिय बरिस जनु चन्द ।
हर्षनाथ कवि भान, मिथिलापति रसजान ॥५॥

रामा—सहि बाणपुत्ति उक्कण्ठिदा व्व लक्खीअदि भोदी ताकिं कोवि पुरसो तुज्झ हिअए वट्टदि[१] ।

उपा [सप्रणयकोपम् ]—किम्पि हिअए कदुअ यहा तहा जप्पसि ता इदो दूरं ओसर[२] [इति पुष्पमालया ताड़यति] ।

१ सखि बाणपुत्री उत्कण्ठितेव लक्ष्यते भवति तत्किं कोऽपि पुरुषस्तव हृदये वर्त्तते ।
२ किमपि हृदये कृत्वा यथातथा जल्पसि तदितो दूरमपसर ।



चित्रलेखा—सहि बाणपुत्ति अप्पणो सहीअणे का लज्जा ताकधेहि सच्चं[१] ।

उपा—[सलज्जमधोमुखीसंस्कृतमाश्रित्य]—
गौरीशिवजलक्रीडा यदा दृष्टा मया सखि ।
ततः प्रभृति केनापि हेतुना व्याकुलम्मनः ॥३॥

रामा—कामेणेति भणिदव्वं[२] ।

उपा । [सलज्जमधोमुखी तिष्ठति] ।

चित्र०—सहि देईए गोरीए प्पसादेण सव्वं सुलहं होदि ता तामेव्वप्पसादेदुं गच्छम्ह[३] । [इति सर्वा देवीगृहमुद्दिश्यगमनन्नाटयन्ति ]

## सोहनी

सखि सब मङ्गलय मन अनुमानी,
गिरजा पूजन चललि सेयानी ।
अक्षत चानन सिन्दुर फूले,
बेलपत्र नव कय समतूले ।
पुजलनि मनदय भवानि चढ़ाए,
कयलनि विनती माथ नवाए ।

१ सखि बाणपुत्रि आत्मनः सखीजने का लज्जा तत्कथय सत्यम् ।
२ कामेनेति भणितव्यम् ।
३ सखि देव्या गौर्याः प्रसादेन सर्वं सुलभं भवति तत्तामेव प्रसादयितुं गच्छामः ।

मँगलनि वर पुनु दुहु कर जोरी,
आशा मोर परिपूरथु गौरी।
हर्षनाथकवि मन मन लाए,
सबखन भगवति रहथु सहाए ॥६॥

[ततः प्रविशति परितुष्टा गौरी]

### सोहनी

निज जन आरति हरण उदेश,
हिमगिरिनन्दिनि देल परवेश।
जनिक चरण युग दरशन लागी,
हरिहर करथि कतेक तप जागी।
भगति विवश सेह दरशन देला,
बाणकुमरि अभिमत बुझिलेला।
कहलनि माधव शुचिदल पाए,
हरितिथि सपनमिलत पतिआए।
ई कहि अन्तर्हित भयगेली,
बाणकुमरि सुनि हरिषित भेली।
हर्षनाथ कवि मन मनलाए,
सब खन भगवति रहथु सहाए ॥८॥

[ इति निष्क्रान्ता। ]



रामा—सहि बाणपुत्ति सम्पण्णमणोरहा तुमं देइए प्पसादेण[1]।

उषा—[सलज्जमधोमुखी तिष्ठति]

चित्र॰—सहि बाणपुत्ति तुज्झ तादस्स घरे आनन्दद्धुणी सुणीअदि ता अह्मे धि तहिं गच्छ्म[2]।

[इति निष्क्रान्ताःसर्व्वाः।]

इति उषावरलाभो नाम प्रथमोऽङ्कः ॥ १ ॥

---

## अथ द्वितीयाङ्कः

[ततः प्रविशति बाणासुरः]

### राग परज

बाणनृपति जग देल परवेश,
काँपथि धरती कच्छपशेश।
सहस्रबाहु गिरि सदृश शरीर,
नयन निरखि केओ रहथ न थीर।
मद्यपान कर लोचन लाल,
काल सदृश तनु वदन कराल।

---

१ सखि बाणपुत्रि सम्पन्नमनोरथा त्वं देव्याः प्रसादेन।
२ सखि बाणपुत्रि तव तातस्य गृहे आनन्दध्वनिः श्रूयते तद्वयमपि तत्र गच्छामः

सकल भुवन जन तृण सम जान,
भुजबल राख अधिक अभिमान।
रसमय हर्षनाथकवि गाव,
श्रीलक्ष्मीश्वरसिंह बुझु भाव ॥१॥

बाणः—कः कोऽत्र भोः।

[प्रविश्य]

दौवारिकः—जअदु जअदु देओ[1]।

बाणः—दौवारिक, सत्वरं मन्त्रिराजं कुम्भाण्डं प्रवेशय।

दौवा०—यथाणवेदि देओ[2]।

[इति निष्कान्तः]

## राग परज

दूत वचन सुनि नृपति निदेश,
शङ्कित मन्त्रिराज परवेश।
मन गुनि कत विध करथि विचार,
कोन परि खेपब नृपदरबार।
निरखि हमर अति सुन्दर रीति,
किदहु होएत नृप मानस प्रीति।
कीदहु हमर जानि किछु दोष,
बाणनृपति मन उपजत रोष।

---

१ जयतु जयतु देवः।
२ यथाज्ञापयति देवः।



अनुछन मन चिन्तित हो आज,
परम कठिन नृप सेवन काज।
हर्षनाथकवि मनदय गाव,
नृप लक्ष्मीश्वरसिंह बुझु भाव ॥२॥

कुम्भाण्डः—जयति जयति महाराजः।

बाणः—मन्त्रिराज, इहास्यताम् [इत्यालिङ्ग्योपवेशयति]।

[उपविश्य]

मन्त्री—देव, हर्षविशेषो लक्ष्यते तत्किं हरप्रसादेन कोपि वरो लब्धः?

बाणः—अथ किम्।

कुम्भा—विशेषेण कथय।

बाणः—कार्त्तिकेयदत्तध्वजपतनेन महद्युद्धमिति।

कुम्भा—महाराज, कुसृष्टिपुष्टोऽसि न भद्रं कृतं नूनमनेन वरेणासुरकुलं क्षयं यास्यति।

बाणः—[सरोषं] आः पाप कुम्भाण्ड ब्रह्माण्डस्फोटनं वाचा करोषि नाहं कस्मादपि बिभेमि शृणु रे संग्रामकातर।

इन्द्रादयो मम त्रासात्स्वाङ्गसङ्गोपना पराः।
परे के सन्ति भुवने ये योत्स्यन्ति मया सह ॥१॥

कुम्भा०—यथा वदति देवः। [ततः प्रपतति मयूरध्वजः।]

बाणः [दृष्ट्वा सहर्षं]—पश्य पश्य मन्त्रिराज पतितो मयूरध्वजः

तन्नूनमचिरेण मम बाहुसहस्रधारणं सफलतामेष्यति तदेहि गौरीशङ्कराभ्यां पुष्पाञ्जलिदानायेति

[निष्क्रान्तौ]

[विष्कम्भकः ।]

[ततः प्रविशति रामाचित्रलेखाभ्यां सहित पुरुषसङ्गचिह्निता]

उषा [सवैक्लव्यम्]

कालङ्गड़ा

सपन देखल एक नागर धीर,
तन्हि मोर धर्षित कयल शरीर ।
फूजल चिकुर फूजल मोर चीर,
आभरण एक रहल नहिँ थीर ।
आनन मलिन घाम भरि गेल,
कोन पुरुष मोहि सङ्गम देल ।
भल छल मरण होइत वरु आज,
के की कहत तकर हो लाज ।
रसमय हर्षनाथकवि भान,
नृप लक्ष्मीश्वरसिंह रस जान ॥३॥

[इति शिरसि हस्तन्निधाय कलङ्कबाधान्नाटयति]



रामा—[सविश्रम्भम्] सहि समस्ससिहि समस्ससिहि ण क्खु कोवि तुज्झ दोसो हुविस्सदि सुमिरेहि सुमिरेहि देइए गोरिए वअणं[1] ।

[इति सर्वं स्मारयति]

उषा—[सानन्दलज्जं स्मरणमभिनयति]

रामा—सहि लद्धमणोरहा तुमं ता कधेहि विसेसेण सविणवुत्तं[2] ।

उषा—[सलज्जं गीतेन कथयति]

सोहनी

सखि हे यतन दय सुनु मोर बानी,
करिय उपाय हृदय अनुमानी ।
सपन समय एक सुन्दर रूपे,
देखल नागर मदन सरूपे ।
तसु मुख लखि तनु पुलकित भेला,
तन्हि पुनि हसि मोहि कर लेला ।
रसमय वचन बोलथि पुनु धीरे,
कोन परि रहओ तखन चित थीरे ॥

१ सखि समाश्वसिहि समाश्वसिहि न खलु तव कोऽपि दोषो भविष्यति स्मर स्मर देव्या गौर्या वचनम् ।

२ सखि लब्धमनोरथा त्वं तत्कथय विशेषेण स्वप्नवृत्तम् ।

तखनुक अवसर कि कहब तोही,
कहइत लाज निवारय मोही ।
रसमय हर्षनाथकवि भाने,
नृपलक्ष्मीश्वरसिंह रस जाने ॥४॥

अपि च

### मालव

सुनु सखि ओरे सरस देखल जनि सुपुरुष,
तसुमुख सुमरि सुमरि होअ कत दुख ।
तनिबिनु ओरे जत अछि एहि जगतीतल,
शीतल से सभ दुखदय बीतल ।
जग भरि ओरे घर घर, हँसअ सकल जन,
मोर मन, तन्हि बिनु थिर नहि कउखन ।
तन्हि पहु ओरे होएत समागम कोनपरि,
हरिहरि, करिय उपाय यतन भरि ।
छनछन ओरे मदन दहन दह मोर तनु,
सखि सुनु, आब न जिउब हम तन्हि बिनु ।
रसबुझु ओरे लक्ष्मीश्वरसिंह गुणमय,
मनदय, हर्षनाथ भन रसमय ॥५॥

[इति विरहवेदनामभिनयति ।]

रामा—सहि समस्ससिहि समस्ससिहि[1] ।

---

१ सखि समाश्वसिहि समाश्वसिहि ।



[चित्रलेखाम्प्रति] सहि चित्तलेहे को उवाओ हुविस्सदि[1] ।

चित्र—कीरिशो अविज्जादजणसङ्गमोवाओ[2] ।

उषा—एवं चिअ मज्जीअणं पि दुल्लहं हुविस्सदि[3] [इति मूर्च्छति]

रामा—समस्ससिहि समस्ससिहि[4] [इत्युत्थाप्य नलिनीदलेन वीजयति]

चित्र—[जलं सिञ्चति]

उषा—[संज्ञां लब्ध्वा सवैक्लव्यम् ।]

### मालव

पहु बिनु किछु नहि भावय रे, कि करब परकारे ।
कोन परि होएत समागम रे, सखि कहु विचारे ।
मलयपवन नलिनी दल रे, चानन घनसारे ।
परसि अधिक तनु तापय रे, जनि निधुम अँगारे ।
सुमरि सुमरि तसु आनन रे, पीयुषसम बानी ।
अनुछन रहत विकल मन रे, सखि सुनह सेआनी ।
जँओ नहि होयत समागमरे, कि कहब सखि आने ।
आनि गरल घोरि पीउब रे हम तेजब पराने ।

---

१ सखि चित्रलेखे क उपायो भविष्यति ।
२ कीदृशोऽविज्ञातजनसङ्गमोपायः ।
३ एवञ्चेन्मज्जीवनमपि दुर्लभं भविष्यति ।
४ समाश्वसिहि समाश्वसिहि ।

हर्षनाथकविशेखर रे, रसमय इहो गावे ।
लक्ष्मीश्वरसिंह गुणमय रे मनदय बुझु भावे ॥६॥

[ततश्चन्द्रकरस्पर्शेन दुःखमनुभूय मूर्च्छति सख्यौ वीजयतः
पुनः संज्ञां लब्ध्वा गीतेन कथयति]

## सोहनी

सखि सखि करह एकर उपचारे ।
रहत विकल मन दहत सतत तन चान किरण दुरवारे ।
कुमुदबन्धु चिरसिन्धुतनूभव कुन्दकुसुमसमधामे ।
एहन चान तन दहन सतत क्षण अमित हृदय परिनामे ।

एतदर्थे श्लोकः

क्षीराब्धिजातः कुमुदस्य बन्धुः कुन्दप्रसूनप्रतिमांशुरेषः ।
तथापि चन्द्रस्तनुदाहकारी स एष हृच्छ्यामलतास्वभावः॥१॥
बड़वानल जक उदर गोड़ धरु किए जलनिधि नहि चाने ।
कालकूट सम जानि मदनहर किय न कयल तसु पाने ॥

अत्रार्थे श्लोकः

और्वाग्निवन्नो शशिनं जुगोप यद्वब्धिरेनं विषवन्मुमोच ।
क्रूरन्तथाप्येनमुदीक्ष्य शम्भुः पपौ दयालुर्विषवन्न कस्मात्॥२॥
राहुदशन बिच जाय जिबए पुनि शशि विरहिन जिवघाती ।
तसु डर यमहु डेराथि जगत मह जे जन अति उपपाती ॥



एतस्मिन्नर्थे श्लोकः

स्वर्भानुदष्टोऽपि जहाति नासून्वियोगिनं प्राणहरः सुधांशुः ।
वितर्कयामि स्फुटमत्र तेन यमोऽपि दुष्टान्नितरामिभेति ॥३॥
धैरज धय रहु, अचिर मिलत पहु, होएत सुशीतल चाने ।
नृपलक्ष्मीश्वरसिंह बुझथि रस हर्षनाथकवि भाने ॥७॥

[ इति मूर्च्छति ]

रमा—[ उषाया नाडीन्निरूप्य संस्कृतमाश्रित्य ]

कदाचिद्वलते नाडी कदाचित्स्थिरताङ्गला ।
एतन्निरूपणेनास्या ज्ञायते चरमा दशा ॥४॥

हाहद्धि का उषाओ हुविस्सदि[१] [ चित्रलेखाम्प्रति]
सहि चित्तलेहे पेक्ख पेक्ख सहीए अवत्थं[२] ।

## सोहनी

कि कहब हे सखि धनिक विशेष
अब न जिउति अतिविरहकलेश ।
परस दगध सेज कि कहब तोहि,
तेँ तसु जीवन निश्चय मोहि ।

१ हा हताऽस्मि क उषायो भाविष्यति
२ सखि चित्रलेखे पश्य पश्य सख्या अवस्थाम् ।

तसु तनुवेदन देखल न जाय,
वसन भूषण तेँ भूमि लोटाए।
नाड़िक भेद बुझय अनुकूल,
करकङ्कण गेल बाहुक मूल।
कीदहु जीवइत अछि सुकुमारि,
बुझय चिकुर उर परसि विचारि।
रसमय हर्षनाथकवि भान,
नृपलक्ष्मीश्वरसिंह रस भान ॥८॥

इत्युभे विलपतः

चित्र——हा हदह्मि कधं उश सहीए प्रियजणं जाणिस्सं[1]

रामा——[संस्कृतमाश्रित्य]।

मुहुर्भ्रान्तिर्म्मुहुर्म्मूर्च्छा मुहुस्संज्ञामुहुर्द्धृतिः।
सखीहृदयबाधाहि हन्तास्मास्वपि दृश्यते ॥५॥

[चित्रलेखाम्प्रति गीतेन]

## सोहनी

हे सखि हे सखि करह उपाय,
विरह वेदन सखि सहलो न जाय।
सपन पुरुषरूप मन अवधारी,
लय पट त्रिभुवन, लिखह विचारी।

१ हा हताऽस्मि कथं पुनः सख्याः प्रियजनं ज्ञास्यामि।



सब तरु सब चीन्हह तोँहँ नारी,
अपन सखी कहु लागु गोहारी।
सखि मोर तसु रूप मन अवधारी,
पट देखि निज प्रिय चिन्हति विचारी।
रसमय हर्षनाथकवि भाने,
नृप लक्ष्मीश्वरसिंह रस जाने ॥९॥

चित्र——[सशिरः कम्पं]-सहि रमणिज्जं क्खु मन्तिदं[1]
[इति तथा करोति]।

## मंझौटी

लेख करगहि ललितलिखनी सकलरंग अनाए ओ।
लिखथि मनदय चित्रलेखा विविधपट्ट बनाए ओ।
देव दानव सिद्ध चारण यक्ष राक्षस किन्नरा।
लिखल रघुकुल सकल यदुकुल अनेक अछि जग नरवरा।
लेख कर गहि बाणतनया देखल पट मनलाए ओ।
निरखि अनिरुध रूप मनगुनि अँगुरि देल देखाए ओ।
कयल सखिसँ अधिक विनती करह सङ्ग उपाए ओ।
हर्षनाथ विचारि मन गिरिजा चरण हिय लाए ओ ॥१०॥

१ सखि रमनीयं खलु मन्त्रितम्।

चित्र—[सशोकं][1] एसो क्खु समुद्दमज्झणिम्मिददोआर-वदीणअरमज्झे वसइ ता कठिणो अस्स सङ्गमोवाओ ।

उषा—[सोत्कण्ठम् ]

## योगिया

जाह द्वारिका आजे, तेजि लाजे, मनदय करु मोर काजे।
योगबल तोंहें सब ठामे, निज कामे, करह गमन अनुपामे ।
जँ तोंहे करह बेआजे, मोर काजे हम न जिउब सखी आजे ।
दक्षिणपवन भेल वामे, परिनामे, हनय मदन मोहि ठामे ।
हर्षनाथकवि भाने परमाने, मिथिलापति रस जाने ॥११॥

[इति चित्रलेखाचरणयोर्निपतति]

चित्र—[आलिङ्ग्योपवेश्य सकरुणम् ]

## दोहा

जाए द्वारका आज हम कामतनय यदुवीर ।
आनि मिलाएब तोहि सँग, धरह सुचेतनि धीर ॥१२॥

[इति सत्वरगमनमभिनयति]

१ एष खलु समुद्रमध्यनिर्मितद्वारवतीनगरमध्ये वसति तत्कठिनोऽस्य सङ्गमोपायः ।



उषा—[निरूप्य][1] कधं गदाज्जेव पिअसही चित्तलेहा ।

[रामाम्प्रति संस्कृतमाश्रित्य]

बहुविनयवितानैः प्रेरिता चित्र-लेखा
कुसुममृदुलदेहा कामिनी दूरदेशम् ।
अविदितबहुभारा द्वारकां सा प्रतस्थे
परहितकरणेच्छुर्न स्मरत्यात्मबाधाम् ॥६॥

रामा । सहि सच्चं[2] ।

उषा—ता अह्मेवि जहा तहा समअणअणत्थं पुप्फवाडिअं गच्छम्ह[3] !

[इति निष्क्रान्ते]

इति चित्रलेखाप्रस्थापनो नाम द्वितीयोऽङ्कः ॥

---

१ कथं गतैव प्रियसखी चित्रलेखा
२ सखि सत्यम् ।
३ तदा वामपि यथा तथा समयनयनार्थं पुष्पवाटिकां गच्छावः ।

## अथ तृतीयोऽङ्कः

[ ततः प्रविशति पथिश्रमन्नाटयन्ती चित्रलेखा ]

एस[1] समुद्दो इअं सा दोआरिया इणं क्खु अनिरुद्धस्स घरं ता एत्थ प्पविशामि [ इति प्रवेशमभिनयति ]

[ ततः प्रविशति चिन्ताकुलोऽनिरुद्धः सवैक्लव्यं ]

मातङ्गेन समानकोमलगतिः कोपे तथा कोमला
मृद्वङ्गी मृदुभाषिणी मृदुवया हास्येऽपि या कोमला ।
स्वप्ने मां समुपागता विधिवशात्सर्वात्मना कोमला
जाता सा कठिना कथं मम पुनर्ह्लेव चित्तङ्गता ॥१॥

अपि च

### सोहनी

हरि हरि देखल अपरुप रामा ।
देखइत जनम सुफल कय मानल पूरल लोचनकामा ॥
तड़ित चपल रुचि कठिन कनकमयवल्ली करि अवधाने ।
निजकौशलपरगासन कञ्जज तसु तनु करु निरमाने ॥
मदन धनुष हर नयन दहन तहँ श्यामल केशर शेषे ।
लखि चतुरानन भाग जुगल करि करु तसु भौंह विशेषे ॥

१ एष द्रमुद्रः इयं सा द्वारका इदं खलु अनिरुद्धस्य गृहं तदत्र प्रविशामि ।



मृग अञ्जन खञ्जन मदगञ्जन लोचन सम निज काँती ।
मानल पङ्कज तें जनि कंजज निज पद देल तसु छाती ॥
अमलकमलमुख लखि रजनीकर अन्तर श्यामलकाँती ।
कनककुम्भ कुच जुगल दम्भ लखि विदलित दाड़िमछाती ॥
दाड़िमबीजदशन बन्धुकमयदशनवसन निरमाने ॥
नृपलक्ष्मीश्वरसिंह बुझथि रस हर्षनाथ कवि भने ॥१॥

अपि च

### देश

रे मोर प्राण पियारी, सुकुमारी ।
कखन मिलति वरनारी ॥
सपन दरश मोहि भेला, बिहदेला ।
कओन हरन कयलेला ॥
लोचन विषमय बाने, नहि आने ।
जे मोर हरल पराने ॥
कि करब हम परकारे, सनसारे ।
तनि बिनु लागु अन्हारे ॥
हर्षनाथकवि भाने, परमाने ।
मिथिलापति रस जाने ॥२॥

[ इति चिन्तामभिनयति ]

चित्र—कधं एसो सो अणिरुद्धो किम्पि चिन्तआणो चिट्ठदि ता यावदस्स हिअदं तक्केमि[1] [ इत्यपावार्य्य तिष्ठति ]

अनि—पुनर्मातङ्गेनेत्यादि पठति ।

चित्र—[निपुणन्निरूप्य] णंएदिणा[2] अस्स वअणोवण्णासेण तक्कीअदि एदेणावि जणेण अह्माणं सा पिअसही सविणे दिट्ठा ता विस्सद्धउवसप्पामि [ इत्युपसर्प्पति ]

अनि—[ दृष्ट्वा सहर्षं ] कथमियं चित्रलेखा ? चित्रलेखे, एषोऽनिरुद्धः प्रणमति ।

चित्र—सम्पण्णमणोरहो होहि[3] ।

अनि—[ स्वगतम् ] परमनुगृहीतोऽस्मि [प्रकाशं] चित्रलेखे सकलैश्वर्य्यवत्याः सिद्धयोगिन्याः किमत्रागमने प्रयोजनं भवत्याः ।

चित्र—गीतेन कथयति ।

### खम्माच

सखि मोर बाणकुमारी, तुअ गुण लुबुधलि से वरनारी ।
सपन समय तोहि देखी, मिलन मनोरथ करए विशेषी ॥

१ कथमेष सोऽनिरुद्धः किमपि चिन्तयन् तिष्ठति तद्यावदस्य हृद्गतं तर्कयामि ।

२ नन्वेतेनास्य वचनोपन्यासेन तर्क्यते एतेनापि अनेनास्माकं सा प्रियसखी स्वप्ने दृष्टा तद्विश्रब्धमुपसर्प्पामि ।

३ सम्पन्नमनोरथो भव ।



तुअ विनु धरय न धीरे, चेतन चिकुर चेतय नहि चीरे ।
अनुछन जप तुअ नामे, मनदय तनिक पुरिअ मनकामे ॥
हर्षनाथकवि भाने, नृपलक्ष्मीश्वरसिंह रस जाने ॥ ३ ॥

अपि च

### केदार

कि कहब तनिक विशेस ( माधव ) कहितहु होअ कलेस ।
आनन करतल राखि ( माधव ) दिवस गमावथि भाखि ।
मदनदहन दह देह ( माधव ) लागु विपिनसम गेह ।
निरखि सरसशशि काप ( माधव ) मलयपवन तनु ताप ।
तुअ सङ्गम अभिलाष ( माधव ) छनभरि जीवन राख ।
अचिर चलिअ तसु धाम ( माधव ) पुरिअ तनिक मनकाम ।
हर्षनाथकवि भान ( माधव ) मिथिलापति रस जान ॥४॥

अनि—चित्रलेखे भवत्याः प्रियसखी मयापि स्वप्ने सङ्गता तदवधि निर्दयः कन्दर्प्पो मां विशिखैर्निकृन्तति तस्मादनुगृहाण मांशोणितपुरनयनेन [इतिचित्रलेखापादयोर्निपतति]

चित्र—[आलिङ्ग्योपवेश्य] कधं अणुग्गहेप्पत्थणा एव्वं होदु[1] [इत्यनिरुद्धेन सार्द्धं गमनमभिनयति]

चित्र—पेक्ख यादअणन्दण शोणिअपुरं एवं इदं क्खु

१ कथमनुग्रहेऽप्यभ्यर्थना एवं भवतु ।

पिअसहीए णिज्जणं सअणघरं ता एत्थ तुमं चिट्ठ अहं पिअसहीं आणेमि[1] । [इति निष्कान्ता]

अनि—

## सोरठ

कखन आउति धनि पासे, पूरत हृदयअभिलासे ।
नूपुरशबद सुनि काने, कखन होयत परमाने ।
कखन देखब भरिआँखी, रहय न धैरज राखी ।
एखनुक एकछन मोही, कोटिकलप सम होही ।
हर्षनाथ कवि भाने, आरत नहि परमाने ॥५॥

[ इत्युत्कण्ठानाटयति ]

[ततःप्रविशति] चित्रलेखा—इअं पुप्फवाडिआ एत्थ पिअसही हुविस्सदि ता एत्थ प्पविशामि[2] [इति प्रवेशमभिनयति] [ततः प्रविशति] उषा रामा च ।

उषा—कधं अज्जावि ण आअदा पिअसही चित्तलेहा[3] ।

रामा—[निपुणन्निरूप्य सहर्ष] पेक्ख पेक्ख इअं आअदासा[4] ।

---

१ प्रेक्षस्व यादवनन्दनशोणितपुरं प्राप्तं इदं खलु प्रियसख्या निर्ज्जनं शयनगृहं तदत्र त्वं तिष्ठ अहं प्रियसखीमानयामि ।

२ इयं पुष्पवाटिका अत्र प्रियसखी भविष्यति तदत्र प्रविशामि ।

३ कथमद्यापि नागता प्रियसखी चित्रलेखा ।

४ प्रेक्षस्व प्रेक्षस्व इयमागता सा ।



उषा—[ दृष्ट्वा सहर्षमालिङ्गय ] सहि चिरेण लोअणाणि शीदलेसि कधेहि आणीदो सो[1] जणो ।

चित्र—अधइ[2]

उषा—कहिं चिट्ठदि[3] ।

चित्र—तुज्झच्च शअणघरे चिट्ठदि ता तुमं पि अहिसारोचिद वेशं कदुअ तत्थ अहिसर[4] ।

रामा—

## कल्याण

अभरन बसन करिअ तनु साजे,
त्वरित चलिअ सखि पहुकसमाजे ।
जखन शयनगृह करिअ पयाने,
छन भरि करब हृदयसमधाने ।
ठाढ़ि रहब मुखझाँपि लजाई,
हठहि बोलिअ जनु कोटि उपाई ।
बहुविध विनति जनाबथि प्रीति,
तखन करब सखि नेहक रीती ।

---

१ सखि चिरेण लोचने शीतलयसि । कथय कथय आनीतः स जनः ।

२ अथ किम् । ३ कुत्र तिष्ठति ।

४ तव शयनगृहे तिष्ठति । त्वमपि अभिसारोचितवेशं कृत्वा तत्राभिसर ।

रसमय हर्षनाथकवि भाने,
नृपलक्ष्मीश्वरसिंह रस जाने ॥६॥

## सोहनी

उषा—

हे सखि हे सखि परिहरि मोही,
करजोरि विनति करिअ हम तोही।
प्रथमसमागम अधिक तरासे,
सुमरि सुमरि जिव उड़य हतासे।
चलय न चरण सुभय नहि मोही,
घाम भरल तन की कहब तोही।
पुलकभरय पुनु कांपय देहा,
हम न जायब सखि हुनि पहुगेहा।
रसमय हर्षनाथकवि भाने,
नृप लक्ष्मीश्वरसिंह रस जाने ॥७॥

[ ततः सख्यौ हस्तं गृहीत्वा बलान्नयतः। सा च सभय-लज्जं शनैर्गच्छति ]

रामा—सहि चित्तलेहे पेक्ख पेक्ख सहीए रूवं[१]।

चित्र—[ निपुणन्निरूप्य गायति ]

१ सखि। चित्रलेखे प्रेक्षस्व प्रेक्षस्व सख्या रूपम्।



## केदारा

चलति शयनगृह सुन्दरि ( सजनी )
नीलवसन तनु साजि।
कनकलता जनि वेसल ( सजनी )
अविरल मधुकरराजि॥
खटिक बिन्दु अरु सिन्दुर ( सजनी )
बिन्दु विराजित भाल।
जनि पङ्कज दल रवि शशि ( सजनी )
उदित भेल एक काल॥
ललित दशन रुचि अनुपम ( सजनी )
अधरनवलदल राज।
जनि बन्धूक कुसुम तर ( सजनी )
विकसितकुन्दसमाज॥
चरणजुगलअनुरञ्जित ( सजनी )
ललितजुगल उरु शोभ।
गज युग पाणि पसारल ( सजनी )
जनि नव पल्लव लोभ॥
जगतजननीपदसेवक ( सजनी )
हर्षनाथकवि गाव।

रसमय लक्ष्मीश्वरसिंह ( सजनी )
नृप बुझु मनदय भाव ॥८॥

अपि च

## मालवरागे गीतम्

चललि केलिगृह सुन्दरि रे, सखि कर गहि लेला।
प्रथमसमागम मन गुनि रे, तनु पुलकित भेला।
ललित कोर मुख पङ्कज रे, छवि देत विशेपे।
जनि पूरण शारद शशि रे, दामिनि परिवेपे।
चिकुर विरचि कसि बान्हल रे, मुखसुन्दरसारे।
अमिअ लोभ शशि मण्डल रे, विषधर परचारे।
युवजनमानसहाटक रे, अनुछन कर चोरी।
तें जनि कुचयुग बान्हल रे, दिढ़ कञ्चुक डोरी।
हर्षनाथकविशेखर रे, रसमय इहो गावे।
लक्ष्मीश्वरसिंह गुणमय रे, मनदय बुझु भावे ॥९॥

[ इति सर्वाश्शयनभवनप्रवेशमभिनयन्ति ]

अनि—[ दृष्ट्वा सहर्षं ] कथमागतैव मत्प्रेयसी तद्यावदेनां निरीक्ष्य लोचने शीतलयामि [ इति सानन्दरोमांचं पश्यति ].

[ ततस्सख्यौ बाणपुत्रीमनिरुद्धाय समर्पयतः ]

अनि—[ करे गृह्णाति ]

रामा—[ अनिरुद्धम्प्रति ]



## इमन

सुपुरुष हृदय विचारि रे, सुनिअ वचन अवधारि रे।
धनि मोर किछु नहि जान रे, राखब हिनक अभिमान रे।
पड़य हिनक जँओ दोष रे, करिअ तकर नहि रोष रे।
सहय लाख अपराध रे, सुजन करय नहि बाध रे।
हर्षनाथकवि भान रे, मिथिलापति रस जान रे ॥१०॥

अनि—परमनुगृहीतोऽस्मि [ इति शिरस्यञ्जलिं घटयति। सख्यौ निष्क्रामतः ]।

उषा—[ सलज्जमधोमुखी तिष्ठति ]

अनि—[ उषाया मुखमुन्नमय्य ]

## गीत मुलतानी

विरह दगध मोर तनु अनुमानी।
वचन सुधारस सिंचह सेआनी ॥
बसन दूर करु आनन चन्दा।
नयन चकोर मोर करु आनन्दा ॥
कर जोड़ि विनती करिअ हम तोही।
एक बेरि नयन निहारिअ मोही ॥
अधरअमिअरस करु परगासे।
करिअ कृतारथ अनुगत दासे ॥

तुअ गुण बुझि अएलहु एहिठामे ।
परसनि भय परिपूरिअ कामे ॥
रसमय हर्षनाथकवि भाने ।
नृपलक्ष्मीश्वरसिंह रस जाने ॥११॥

[ इति शयने उपवेशयति ]

[ नेपथ्ये ] इदो इदो पिअसही[1] ।

उषा—कथं पिअसहीओ आअच्छन्ति ता अहम्पि गच्छेमि[2] [ इत्युत्थाय प्रचलित ]

अनि—कथं गतैव प्रेयसी तदहमपि बहिर्भवनमाह्निककर्म्मणे गच्छामि [ इति निष्क्रान्तः ]

[ ततः प्रविशतश्चित्रलेखारामे ]

रामा—कधंप्पभादप्पाआ रअणी तधाहि[3]

## गीत ललित

सखि सखि ललित समय लखु भोर ।
नागर नागरि रङ्गनि रङ्ग करि शयन करय प्रियकोर ॥
धीवरअङ्क मयङ्कतरणि चढ़ि शशिकरजाल पसार ।
उडुगन मीन बझाए चलल जनि गगनपयोनिधिपार ॥

१ इतः इतः प्रियसखी ।
२ कथं प्रियसख्यावागच्छतः तदहमपि गच्छामि ।
३ कथं प्रभातप्राया रजनी तथाहि



रविकरकलिततिमिरपटमोचन प्रकट अरुण तनुभास ।
लाज पुरुब दिश मुनल कुमुद दश लखि कमलिनि करु हास ॥
मलयपवन कम्पिततनु कमलिनि कोप अरुण करि अङ्ग ।
उपगत मधुकर करय निरादर कुमुदिनि सङ्ग पिशङ्ग ॥
पति वञ्चित रति युवति विकल मति करति सौति अभिशाप ।
पति गञ्जन सहि विविध वचन कहि करत दोष अपलाप ॥
गुञ्जत मधुप विहङ्गम कूजत शयन कुशल जनि भाप ।
हर्षनाथ कवि वचन सुधारस विरल रसिक जन चाप ॥१२॥

इदाणींपि पिअसही शअणघरादो ण आअदा [ पुनर्न्निरूप्य ] कधं आअदाज्जेव[1] ।

उषा—[ झणझणन्नूपुरं सख्यावालिङ्गति ]

रामा—सहि कधेहि कधेहि पढुम सङ्गम वुत्तम्[2] ।

उषा—[ गीतेन ]—

## ललित

मनदय सुनिअ वचन सखि आजे ।
सुपहु समागम कहितहु लाजे ॥
रसमय पहु अञ्चल गहि लेला ।
लाज वदन मोर अवनत भेला ॥

१ इदानीमपि प्रियसखी शयनगृहान्नागता कथमागतैव ।
२ सखि कथय प्रथमसमागमवृत्तम् ।

जखन अधर रस कयलनि पाने ।
लाज चिकुर फुजि कयल पयाने ॥
कुचयुग परसि कयल हँसि कोरा ।
लाज लजाए पड़ाइलि मोरा ॥
सुमरि सुमरि सखि तसु व्यवहारे ।
गदगद स्वर पुलकित तनु भारे ॥
रसमय हर्षनाथकवि भाने ।
नृपलक्ष्मीश्वरसिंह रस जाने ॥१३॥

रामा—सहि बाणपुत्ति तुम्ह तादस्स घरे कलअलो सुणीअदि ता वअंपि गच्छम्ह । [ इति निष्क्रान्ता[1] ]

इति अनिरुद्धसमागमो नाम तृतीयोऽङ्कः ।

## अथ चतुर्थोऽङ्कः

[ ततः प्रविशति ]

बाणासुरः—कः कोऽत्र भोः ।

[ प्रविश्य ] द्वारी । जअदु जअदु देओ एसोऽह्मि आणवेदु देओ[2] ।

बाणः—कथय मदन्तःपुरवृत्तम् ।

[ द्वारी गीतेन कथयति ]

१ सखि बाणपुत्रि तव तातस्य गृहे कलकलः श्रूयते तद्वयमपि तत्र गच्छामः ।

२ जयतु जयतु देवः एषोऽस्मि आज्ञापयतु देवः ।



### नट रागे

कि करब नीच कथा परगास,
कहि न सकिअ किछु होअ तरास ।

नागर एक मनोभव वेश,
कयल कुमरि मन्दिर परवेश ।

भेलिह तनिक वश राजकुमारि,
एतबा अयलहुँ नयन निहारि ।

कि करिअ मन गुनि एकर विचार,
राजकुमरि भेलि कुलक अङ्गार ।

हर्षनाथ कवि भनदय गाव,
नृप लक्ष्मीश्वरसिंह बुझु भाव ॥१॥

बाणः—हा हतोऽस्मि महति कुले कलङ्को जातः ( सवैक्लव्यम् ) ।

लब्धा शुद्धकुलेजनिस्सुविहिता सेवामृडानीपते
र्निर्जित्यामरदैत्यदानवकुलं लब्धः प्रतापोऽधिकः ।
भ्रातृत्वं शरजन्मनोप्यधिगतन्तस्यापि मे मानुषा-
त्सञ्जातं कुलधर्षणङ्कथमहो चित्रा गतिः कर्म्मणाम् ॥१॥

अपि च

## ललित रागे

कओन दुरितफल विहि भेल वंके,
एहन पवित्रकुल भेल कलंके।
कि करब आब कुलक अभिमाने,
से जनमलि जे कटलक काने।
सुर नर मुनिगण परिजन साथे,
कोन परि उपर करब हम माथे।
मनकर गरल करिअ हम पाने,
अगिनि, गमन करि तेजिय पराने।
हर्षनाथ कवि मनदय गावे,
नृप लक्ष्मीश्वरसिंह बुझु भावे ॥२॥

[ पुनस्सक्रोधं करान् करैः प्रपीड्य ]

## वसन्त राग

सहसभुज मोर करि अनादर, कयल कुल अपमान ओ।
जेहन जेजन परमदुर्जन, हरब तनिक परान ओ।
दैत्य दानव यक्ष राक्षस, देवगण लय साथ ओ।
तनिक होथि सहाय जँओ, पुनु सभक कटाव माथ ओ।
हमर भुजडर असुर सुर नर, सभक कम्पित गात ओ।



के एहन जग माह जे जन, करथि नाहे प्रनिपात ओ।
करब आज अन्हार दहदिस, विशिख लय रण जाए ओ।
हर्षनाथ विचारि मन, गिरिजा चरण हिअ लाए ओ ॥३॥

[ पुनः सक्रोधं ] शृणु रे द्वारिन् सत्वरमद्ययाहि किंकरसैन्यसमुद्योगाय।

द्वारी—तथा[1] [ इति निष्क्रान्तः ]

नेपथ्ये—भोः भोः किङ्करादिगणाः सौधं वेष्टयित्वा सज्जीभवन्तु भवन्तः।

[ पुनर्नेपथ्ये ]—वेष्टितमस्माभिस्सर्व्वमन्तःपुरम्।

बाणः—कथमागतं किङ्करसैन्यम्।

[ पुनर्नेपथ्ये ] प्रहरन्तु प्रहरन्तु भवन्तः एष रतितस्करः परिघं भ्रामयंस्तिष्ठति।

बाणः—कथमुपक्रान्तमेव युद्धं तदहमपि तस्य दैवहतकस्य पराक्रमं गत्वा पश्यामि [ इति निष्क्रान्तः ]

[ ततः प्रविशति परिघपाणिरनिरुद्धः ] एषोऽहमसुरकुलं नाशयामि अद्यास्मद्विक्रमं पश्यन्तु लोकाः।

[ नेपथ्ये ] हा हदम्हि अज्जउत्तस्स का अवत्था हुविस्सदि[2]

१ तथा।
२ हा हताऽस्मि अधार्य्यपुत्रस्य का अवस्था भविष्यति।

अनि—कथमियमस्मत्प्रेयसी बाणसंग्रामसमुद्योगमाकर्ण्य भयविह्वला किमपि विलपन्ती इत एवाभिवर्त्तते। तद्यावदेनां समाश्वासयामीति, [ तां प्रतीक्षमाणस्तिष्ठति ]

[ ततः प्रविशत्युषा ] पुनर्हा[1] हदम्हि इत्यादि पठति।

अनि—प्रिये न भेतव्यम्।

## दोहा

बाण सहित जत असुरगण, सभक करब हम नाश।
अचिर मिलब हम तोहि पुनु, सुन्दरि तेजह तरास ॥५॥

[ इत्युषां समाश्वास्य सत्वरं युद्धाय निष्क्रान्तः ]

उषा—कधं गदो अज्जउत्तो ता अहंपि देइं प्पसादेदुं गच्छेमि[2] [ इति निष्क्रान्ता ]

[ ततः प्रविशति ]

चित्रलेखा—कधंरणवुत्तंविजाणिदुं[3] पेसिदो चारो चिराअदि [ पुनस्सर्व्वतोऽवलोक्य ] अअंआअदोज्जेव[4]।

[ततः प्रविशति] चारः इयं चित्रलेखा तद्यावदुपसर्पामि [ इत्युपसर्पति ]

---

१ हा हताऽस्मि।
२ कथं गत आर्य्यपुत्रः तदहमपि देवीं प्रसादयितुं गच्छामि।
३ कथं रणवृत्तं विज्ञातुं प्रेषितश्चारश्चिरायते।
४ अयमागत एव।



चित्र—कधेहि कधेहि रणवुत्तम्[1]।

चारः—शृणु सर्व्वम्।

## गीत लाउनि

रथ चढि बाण महासुर आयल लय चतुरङ्ग बल धीरे।
कर गहि परिघ असुर कुलमारल अनिरुध यादव वीरे।

चित्र—[ सहर्षं ] उज्जीविदह्मि तदो तदो[2]।

चारः—

काम तनय डर सकल पडायल जत छल रिपुदल वीरे।

चित्र—[सहर्षं] इणं पारिदोसिअं गेह्ण[3] [इत्यङ्गुरीयकन्ददाति] तदो तदो[4]।

चारः—

नयन निरखि कहू कुपित भेल पुनु बाण नृपतिरण धीरे।

चित्र—हा संशइद ह्मि तदो तदो[5]।

---

१ कथय कथय रणवृत्तम्।
२ उज्जीविताऽस्मि ततस्ततः।
३ इदं पारितोषिकं गृहाण।
४ ततस्ततः।
५ हा संशयिताऽस्मि ततस्ततः।

चारः—

जगभरि जनिक समान आन नहि रिपुकुल कम्पित जाही।
नागपाशलय दृढकय बाँधलक कयल अपन वश ताही।

चित्र—[ सवैक्लव्यं ] हा हद्धि तदो[1] तदो[2] ।

चारः—

कामतनुज तन कम्पन उपजत तेजन निय अभिमाने।
नृप लक्ष्मीश्वरसिंह बुझथि रस हर्षनाथ कवि भाने ॥७॥

चित्र—तदो तदो[2] ।

चारः—ततश्चानिरुद्धं हन्तुमुद्यतं बाणासुरं जामाताऽयं न हन्तव्य इति कुम्भाण्डो निवर्त्तयामास ।

चित्र०—सुट्ठु किदं मन्तिराएण ता रणवुत्तं पिअसहीए णिवेदिदुं गमिस्सं तुमं पि पुणो तद्वुत्तं विजाणिदुं तत्थ अहिसर[3] ।

चारः—तथा [ इति निष्क्रान्तौ ] [ विष्कम्भकः ]

[ ततः प्रविशति नागपाशबद्धोऽनिरुद्धः सर्पबन्धनबाधान्नाटयन् ] (स्वगतं) किमिदानीमनुष्ठेयं कथं बन्धमोक्षो भविष्यति। ( विमृष्य ) भगवत्या दुर्गायाः प्रसादमन्तरेण

---

१ हा हताऽस्मि ततस्ततः।

२ ततस्ततः।

३ सुष्ठु कृतं मन्त्रिराजेन तद्रणवृत्तं प्रियसख्यै निवेदयितुं गच्छामि त्वमपि पुनस्तद्वृत्तं विज्ञातुं तत्राऽभिसर।



को वा प्रतीकारो भविष्यति तद्यावत्तामुपश्लोकयामि। साञ्जलिबन्धं [ प्रकाशम् ]

## गीत सोरठ

जय जय महिषविनाशिनि भगवति सिंहगमनि जगदम्बे।
त्रिभुवनतारिणि विपदनिवारिणि सकल भुवन अवलम्बे।
त्रिदश तपोधन दनुज मनुज गण चिकुर निकर अभिरामे।
तुअ पद चिन्तन विमुख सतत मन किदहु होएत परिणामे।
हमर दुरित मति जानि सकल गति करिअ न अतिशय रोषे।
तनय रहित मति करय अनलगति कहिअ ककर थिक दोषे।
तुअ गुण निगम अगम हरिहर विधि कहि न सकथि अनुपामे।
अनेक जनम तप करथि जतन दय तुअ पद दरशन कामे।
क्षमिय हमर अपराध कृपामयि करिअ अभय वर दाने।
गिरिनन्दिनि पदपङ्कज मधुकर हर्षनाथ कवि भाने ॥८॥

[ इति ताम्ध्यायति ]

[ ततः प्रविशति ] भक्तिपरतन्त्रा दुर्गा—प्रसन्नाऽस्मि तत्राभीष्टमभ्यर्थय ।

अनि—नागबन्धनान्मुक्तिर्भवतु ।

दुर्गा—एवमस्तु तथापि कृष्णागमनपर्यन्तमबद्धेनाऽपि त्वया बद्धवद्भवितव्यं । [ इति निष्क्रान्ता ]

अनि——कथङ्कतैव जगदम्बा । ( विमृष्य सहर्षं ) विनष्टम्मम सर्प्पबन्धनदुःखं भगवत्याः प्रसादात् तदिदानीम्मयाऽपि तच्चरणकमलन्ध्यायता कृष्णागमनप्रतीक्षमाणेन कुत्रचिद्वर्त्तितव्यम् ( इति निष्क्रान्तः )

इति अनिरुद्धबन्धमोचणो नाम चतुर्थोऽङ्कः ॥

---

## अथ पञ्चमाङ्क

[ ततः प्रविशति ]

चिन्ताकुलकृष्णः— कथमनिरुद्धान्वेषणाय प्रेषितश्चाश्चिरायते । ( पुनस्सर्व्वतो विलोक्य ) अयमागत एव ।

[ ततः प्रविशति ] चारः जयति जयति देवः ।

कृष्णः— कथय कुत्रापि मिलितोऽनिरुद्धः ।

चारः—

### गीत लावनी

जल थल कानन जत हम जानल जोहल कय परवेशे ।
तेजि सकल भय परम यतन दय कतहु न पायोल उदेशे ॥
पारिजात तरु हरिलय आनल तेँ सुरपति कँह रोषे ।
तेँ जनि कामतनय हरिलय गेल ई होअ तर्क विशेषे ॥

( अथवा )



हिनक निरखि तनु करब दोसर पुनु सुन्दर तनु निरमाने ।
ई जनि मन करि लय गेल बिह हरि ई होअ मन अनुमाने ।
जे किछु बुझि भेल से हम कहि देल अपनहि करु अनुध्याने ।
नृप लक्ष्मीश्वरसिंह बुझथि रस हर्षनाथ कवि भाने ॥१॥

कृष्णः——मैवं वादी न देवताः क्षुद्रमतयो भवन्ति तत्पुनरेव गत्वाऽनिरुद्धमन्वेषय ।

चारः——यथाज्ञापयति देवः । [ इति निष्क्रान्तः ]

कृष्णः——[ सवैक्लव्यं ] यत्नेनान्वेषितोऽप्यनिरुद्धो न मिलति अन्तःपुरे च तद्विश्लेषप्रभवः कोलाहलो न निवर्त्तते । तत्किमत्र विधेयम् [विमृष्याकाशे सस्मरणं]नारदद्वारा सर्व्वमवगन्तव्यं स च सर्व्वत्रानुसरन् सर्व्वंजानाति [इति नारदं स्मरति]

[ ततः प्रविशत्याकाशमार्गेण नारदः ]

### गीत दादरा

गगन गमन मुनि लेल परवेश ।
भाल तिलक शोभ धवलित केश ।
हाथ कमण्डलु दण्ड विराज ।
आवथि नारद हरिक समाज ।
चौदह भुवन फिरथि सब ठाम ।
अनुखन कलह देखन मन काम ।

बिनु मूल कलह करथि जे तूल ।
कतय चुकथि से लखि कइ मूल ।
हर्षनाथ कवि मनदय गाव ।
नृप लक्ष्मीश्वरसिंह बुझु भाव ॥२॥

कृष्णः—[ प्रणमति ]

नारदः—[ शुभाशिषन्दत्वा ] कथय कथय केन हेतुना स्मृतोऽस्मि ।

कृष्णः—केनापि हृतोऽनिरुद्धो न मिलति तत्कथय त्रिभुवनमटता भवता कुत्रापि दृष्टः ।

नारदः—बाणपुत्री प्रियचिकीर्षया शोणितपुरं चित्रलेखया नीतः । तत्र च बाणासुरेण सह सङ्गरं कृत्वा नागपाशेन बद्धस्तिष्ठति ।

कृष्णः—[ ससम्भ्रमं ] कथन्तत्र गन्तव्यम् ।

नारदः—बलभद्रप्रद्युम्नाभ्यां सह गरुडमारुह्य सत्वरङ्गन्तव्यम् । अहमप्याकाशमार्गेण गत्वा सङ्गरमालोकयन् चिरेण चक्षुषी शीतलयिष्यामि ।

कृष्णः—तथेति [ गरुडं स्मरति ]

[ ततः प्रविशति पक्षवातकम्पिताखिलचराचरो गरुडः ]

जयति जयति देवः किमर्थं स्मृतोऽस्मि ।

कृष्णः—[ सादरं ] आतानिरुद्धमोक्षणाय शोणितपुरं गन्तव्यम् ।



गरुडः—तथा [इत्युत्कण्ठान्नाटयति]

कृष्णः—कथञ्चिरेणाऽऽहूतौ बलभद्रप्रद्युम्नौ नागतौ । [पुनर्निरूप्य] एतावागतावेव ।

[ततः प्रविशति बलभद्रः प्रद्युम्नश्च]

कृष्णः—[दृष्ट्वा ससंभ्रमंबलभद्रप्रद्युम्नौ प्रति] अनिरुद्धमोक्षणाय सर्व्वैरस्माभिः शोणितपुरं गन्तव्यम् ॥

बलभद्रप्रद्युम्नौ—एवमस्तु [इति निष्क्रान्ताः]

[ततः प्रविशति] बाणासुरः—कथञ्चिरेणाऽऽहूतो ज्वरो नेदानीमप्यागतः । [पुनर्निरूप्य] अयमागत एव ।

[ततः प्रविशति ज्वरः]

### गीत मालव

अति उनमत्त भयङ्कर वेश,
रोगराज ज्वर देल परवेश ।
तीनि चरण तिनि मुख विकराल,
नवलोचन कओ बाहुविशाल ।
नयन निमीलित आलस पाए,
हाथ भसम अनुछन हकिआए ।
चौदिश झुकि झुकि करय पयान,
जाहि परसय ताहि हरए परान ॥३॥

ज्वरः---जयति जयति देवः । कथय किमर्थमाहूतोऽस्मि ।

बाणः---बलभद्रप्रद्युम्नाभ्यां सह यदुप्रवीरः कृष्णोऽस्माभियोंद्धुं समागतः । तदद्य भवता सर्व्वतस्सेनाव्यूहं विधाय रणभूमौ सावधानेन भवितव्यम् ।

ज्वरः---यथाऽऽज्ञापयति देवः [इति निष्क्रान्तः]

बाणः---[सर्व्वतो विलोक्य] कथं गत एव रोगराजः । तदस्माभिरपि रथमास्थाय रणभूमौ गन्तव्यम् [इति निष्क्रान्तः]

[ततः प्रविशति] चित्रलेखा—बाणनिग्गहणिमित्तं सिरीइन्हो अआदो ता इणं वुत्तं सहीए पिअअणे णिवेदिदुं गच्छेमि[1] [इति गमनमभिनयति] ।

[ततः प्रविशति] अनिरुद्धः---कथमियं चित्रलेखा । चित्रलेखे कथय शोणितपुरवृत्तान्तम् ।

चित्र---सिरीकन्हो आअदो दीसदि[2] ।

अनि---तर्हि निगृहीत एव बाणः ।

चित्र । सब्वंसम्भावीअदि[3] ।

[नेपथ्ये गीयते]

१ बाणनिग्रहनिमित्तं श्रीकृष्ण आगतस्तदिदं वृत्तं सख्याः प्रियजने निवेदितुं गच्छामि ।

२ श्रीकृष्ण आगतो दृश्यते ।

३ सर्व्वं सम्भाव्यते ।



## गीत झंझौटी

गरुड़ चढ़ि बलदेव सँगलय कामदेवक साथ ओ ।
चक्र कर गहि धाए पहुँचल, शोणित पुर यदुनाथ ओ ॥
भेल सङ्गर अति भयङ्कर, बाण किङ्कर सङ्ग ओ ।
हनल रिपुदल समर अतिबल, कयल ज्वर तनुभङ्ग ओ ।
रोगराज विलाप सुनि हरि, कयल तसु जिवदान ओ ।
कहल बहुविधभाग तनु करि, फिरह सकल जहान ओ ।
कुपित रथ चढ़ि बाण पहुँचल, घोर सङ्गर भेल ओ ।
कृष्णबाणक बाहु काटल छाड़ि, दुइ भुज देल ओ ॥
बाण हरषित भेल पुनु, त्रिपुरारि सों वर पाए ओ ।
हर्षनाथ विचारि मन, गिरिजाचरण मन लाए ओ ॥४॥

अनि—[सहर्षं स्वगतं] नूनमयमस्मत्पितामहविजयो बन्दिजनैर्गीयते । [प्रकाशं] चित्रलेखे श्रुतम्भवत्या

चित्र—भद्दं सुदं[1] ।

( पुनर्नेपथ्ये ) इत इतो भवन्तः ।

चित्र—कथं णारअ णिद्दिट्ठ मग्गो बलहद्द-

१ भद्रं श्रुतम् ।

पज्जुम्मेहिं सह सिरीकन्हो इदोज्जेव्व अहि वट्टदि ता अहंपि तस्स दंसणेण अज्ज लोअणाइ शीदलइस्सं[1] ।

अनि—एवमेवं ।

[ ततः प्रविशति बलभद्रप्रद्युम्नाभ्यां सह गरुड़ारूढ़ः श्रीकृष्णो नारदश्च ]

नारदः—एष नागपाशबद्धोऽनिरुद्धस्तिष्ठति तदेनम्मोचयतु गरुडो नागपाशात् ।

गरुडः—[तथेत्युपसर्प्पति नागाः पलायन्ते]

अनि—एषोऽनिरुद्धोऽहं भवतः प्रणमामि ।

बलभद्रः—सर्व्वदा कल्याणमाप्नुहि ।

कृष्णः—क्व पुनरस्माकं स्नुषा बाणपुत्री चित्रलेखे प्रवेशय ताम् ।

चित्र—तहा[2] । (इति निष्क्रम्य तया सह प्रविशति)

चित्र—एसा अह्माणं पिअसही बाणपुत्ती तुस्से पणमइ[3] ।

बलभद्रः—सौभाग्यपात्री भूयात् ।

कृष्णः—देवर्षे नारद किमतःपरं विधेयम् ।

---

१ कथं नारदनिर्दिष्टमार्ग्गैः बलभद्रप्रद्युम्नाभ्यां सह श्रीकृष्ण इत एवाभिवर्त्तते तदहमपि तस्य दर्शनेनाद्य लोचने शीतलयिष्यामि ।

२ तथा ।

३ एषाऽस्माकं प्रियसखी बाणपुत्री युष्मान् प्रणमति ।



नारदः—देव स्वजनसमाश्वासनाय बाणपुत्र्यनिरुद्धाभ्यां सह झटिति द्वारवती गन्तव्या ।

कृष्णः—एवमस्तु । [ इति सर्व्वे गमनमभिनयन्ति ]

नारदः—कथं कृतकार्य्यैर्युष्माभिः क्षणमात्रेण द्वारवती प्राप्ता ।

कृष्णः—सर्व्वम्भवतः प्रसादात् ।

[ ततः प्रविशति पुरस्त्रीभिस्सह रुक्मिणी ]

[ सहर्षं कृष्णम्प्रति ] अज्ज सम्पण्णमणोरहा अहं वहुए बाणपुत्तीए दंसणेण[1] ।

कृष्णः—एवमेवं तदनया सममनिरुद्धं नीराजयतु भवती ।

रुक्मिणी—तधा[2] । [ इति नीराजयति ]

## गीत चुमाओन आरती

पुरब जनम तप समुचित आज सुमङ्गल भेल ।
लय नागरि यदु बालक हरषित दरशन देल ।
आनन्द भरल नगर भरि भूषण वसन समारि ।
यदुपति भवन गमन करि कर कौतुक नर नारि ।

---

१. अद्य सम्पूर्णमनोरथा अहं वध्वा बाणपुत्र्या दर्शनेन ।

२. तथा ।

कनक कलस पुरहर करि मणिमय दीप बराए।
दूबि अच्छत कर लय कहुँ चानन भवन निपाए।
नगर नारि यदु बालक नागरि सहित चुमाव।
हर्षनाथ भन मनदय मिथिलापति शुभभाव ॥५॥

नारदः—[ कृष्णम्प्रति ] किन्ते भूयः प्रियमुपकरोमि।

कृष्णः—अतःपरमपि प्रियमस्ति। तथापीदमस्तु—

राजानः परिपालयन्तु वसुधान्धर्म्मेण सर्व्वे जना-
स्स्वीयङ्कर्म्म समाचरन्तु समये वर्षन्तु धाराधराः।
एतद्वृत्तनिबद्धनाटकरसास्वादानुरक्ताश्चिरं
भूयासुर्निरुपद्रवास्सहृदया भूरस्तु शस्यान्विता ॥१॥

नारदः—एवमस्तु।

[ इति निष्क्रान्तास्सर्व्वे ]

इति द्वारवतीप्रत्यागमनो नाम पञ्चमोऽङ्कः।

इति श्रीहर्षनाथकविविरचितमुषाहरणनाम

[ नाटकम्परिपूर्णम्। ]

[ यवनिकापतनम्। ]





# माधवानन्दनाटकम्

## अथ प्रथमोऽङ्कः

( गीति )

जय जगजननी जय जगजननी देहु सुमति मृगपतिगमनी।
सरसिरुहासन विपदविनाशनकारिणि मधुकैटभदमनी ॥
दितिसुतरञ्जन सुरगणगञ्जन महिपमहासुरबलदलनी।
त्रिभुवनतारिणि महिषविदारिणि धूम्रनयनभसमकरनी ॥
चण्डमुण्डशिरखण्डनकारिणि उनमतरक्तबीजशमनी।
अतिबलशुम्भनिशुम्भविनाशिनि निजजनसकलविपदहरनी ॥
तुअ गुण निगम अगम चतुरानन कहि न सकत कत सहस्रफणी।
अमरनिशाचरदनुजमनुजशिरचिकुरकलितजितरकतमनी ॥
तुअपदयुगलसरोरुह मधुकर हर्षनाथ कवि सरस भनी ॥१॥

अपि च।

या देवी कुमुदेन्दुकान्तिरुचिरा शुभ्राम्बरा शोभना,
चन्द्रार्द्धाङ्कितमस्तकेन्दुवदना हंसाधिरूढा करैः।
वीणामक्षगुणं सुधाढ्यकलशं विद्यां दधानादराद्
भक्तानन्दकरी सदा वितरतु श्रेयांसि सा शारदा ॥२॥

( नान्द्यन्ते )

सूत्रधारः—अलमतिविस्तरेण । एषा खलु खण्डवला-कुलकमलदिवाकरस्य महाराजरुद्रसिंहात्मजनेत्रेश्वरसिंहतनूजन्मनः श्रीश्रीमदेकरदेश्वरसिंहदेवस्य गुणिजनोपासिता परिषत् कस्याप्यभिनवरूपकस्य प्रयोगावलोकनाय समुत्कण्ठितेव लक्ष्यते । तत्कतमेन रूपकेणात्रोपस्थातव्यं येनैतस्याः प्रसादपात्रतां गमिष्यामीति नाध्यवस्यामि । ( पुनः स्मृतिमभिनीय ) अस्ति किलास्मासु सकराढीकुलनन्दनेन कविपण्डितकुलतिलकेन श्रीहर्षनाथशर्मणा विरचय्य समर्पितं माधवानन्दं नाम नवीनं नाटकम् । यत्र खलु

रासक्रीडा प्रेमगर्वमानानुशयविस्तरः ।
वर्णितोऽनुनयः पश्चात्काननक्रीडनं तथा ॥३॥

तदभिनयेनैषा रञ्जनीया । तत्साहाय्यनिमित्तं गृहिणीमाह्वयामि तावत् ।

( परिक्रम्य नेपथ्याभिमुखम् । )

प्रिये ! इहागम्यताम् ।

( प्रविश्य )

नटी—एसाम्हि[1] आणवेदु अज्जउत्तो ।

सूत्र—प्रिये ! पश्य रमणीयतां शरत्समयस्य । इह हि

१ एषाऽस्मि आज्ञापयतु आर्यपुत्रः ।



निर्मेघमम्बरतलं विमलाः सरस्य-
श्चञ्चन्मृगाङ्ककरचुम्बितदिङ्मुखानि ।
सम्फुल्लकैरववनीषु मनोहरासु
गुञ्जन्ति मञ्जु मधुपानरता मिलिन्दाः ॥४॥

तदेतन्निशामधिकृत्य सङ्गीतकमनुष्ठीयताम् ।

नटी—जहा[1] आणवेदि अज्जउत्तो ( इति गायति )

सुन्दरशरदसमय सुखधामे !

सजलजलद गेल विमल गगन भेल शशिमण्डल अभिरामे ॥
तेजि ककुभकामिनि निज दिनमणि अस्तशिखर चल गेला ।
निरखि सुनवर जनि रजनीकर उपपति उपगत भेला ॥
सफल नयनरुचिचोरतिमिर जनि हिमकर दीप तरासे ।
सघन विटपिदलविषम महीतल गिरिकन्दर कर बासे ॥
रविकरकलितवलितकमलिनि तँह कुमुदपराजित भेला ।
दिनकरविरह निरखि निशि कुमुदिनि तसु सम्पति हरिलेला ॥
रजनिमलिन नलिनी तेजि मधुकर कुमुदिनि अनुगत होई ।
सम्पद सकल चराचर अनुचर आपद बन्धु न कोई ॥
निर्मल सरित शरदसमयोचित कमिच पुलिन दरशावे ।
लाज अधीन नवीन युवति जनि लघु लघु जघन देखावे ॥

१ यथाऽऽज्ञापयति आर्यपुत्रः ।

मलय पवन वह चित नहि थिर रह परिहर मानिनि माने ।
एकरदेश्वर सिंह बुझथि रस हर्षनाथ कवि भाने ॥५॥

सूत्र—प्रिये ! रमणीयं खलु गीतम् ।

( नेपथ्ये )

( दोहा )

बन्धुजीव नवमल्लिका केतकि कुमुदिनि कुन्द ।
चन्द्रकला[1] मधुपान करि गुञ्जन मत्तमिलिन्द ॥६॥

सूत्र—( आकर्ण्य ) इयं खलु व्रजकामिनीभिस्सह रासक्रीडाप्रसक्तस्य मुरलीं वादयतः श्रीकृष्णस्य प्रावेशिकी दोहा गीयते । तदेहि आवामप्यनन्तरकरणीयाय सज्जीभवावः । ( इति निष्क्रान्तौ ) ।

इति प्रस्तावना

( ततः प्रविशति यथानिर्दिष्टः श्रीकृष्णो व्रजकामिन्यश्च )

( गीत )

आनन्द नन्दकिशोर आज व्रज रास रचो ।
केतकि कुन्द कुमुद परिमल लय मलय पवन बह धीर ॥
पूरनचन्द्र किरण चकमक कर विकसित कुञ्जकुटीर ॥

१ वक्ष्यमाणचन्द्रावलीकृष्णसङ्गमसूचकत्वादेतत् पताकास्थानकम् 'प्रस्तुतागन्तुभावस्य वस्तुनोऽन्योक्तिसूचनं पताकास्थानकम्' इति दशरूपोक्तलक्षणात् ।



अलक विरचि सिर सिन्दुर लोचन कज्जल उरविच हार ।
घरघर से निकसलि व्रजवनिता नूपुर कर झनकार ॥
पिककूजित अलिगुञ्जित भूषणसिञ्जित चौदिश पूर ।
गावय गीत मधुर धुनि सखिगण जनमताप कर दूर ॥
वंशी अधर मुकुट शिर कछनी कटि तनु ललित त्रिभङ्ग ।
नटवर भेष किये यदुनन्दन विहरत राधा सङ्ग ॥
जप तप नियम करत कत मुनिजन जेहि पद दरशन काज ।
हर्षनाथ भन तसु गोपीजन सहज दरश कर आज ॥७॥

राधा—[ सर्वतो विलोक्य । संस्कृतमाश्रित्य ] कथम् प्रभातप्राया रजनी । इह हि—

दृष्ट्वा रासमहोत्सवं निशि शशी ताराभिरत्यादरा-
न्नूनं जागरणेन सम्प्रति दृढं खिन्नः परिम्लायति ।
एषा कैरविणी शुभाऽनुहरते म्लानिं सुधांशोस्सती
दृष्ट्वा म्लानमरिव्रजं सरसिजव्रातस्समुज्जृम्भते ॥८॥

श्रीकृष्णः— अहम् पुनरेवमुत्प्रेक्षे ।

कान्ते त्वन्मुखमण्डलेन विजितः क्षीणाभिमानश्शशी
नूनम्मज्जति वारिधावनुगतिं कुर्वन्ति तस्य प्रियाः ।
तारास्सर्व्वमिदं विलोक्य कुमुदैस्तद्बन्धुभि खिद्यते
दृष्ट्वा वैरिविपत्तिमम्बुजकुलं हृष्टं समुज्जृम्भते ॥९॥

भवतु, सम्प्रति प्रातस्समयोचितकर्मानुष्ठानाय सर्वैरेवास्माभिर्गन्तव्यम् ॥

